# शङ्कर भक्त सभा ट्रस्ट्

## वेदभवनम्

# यजुर् उपाकर्मा

*Sankara Bhaktha Sabha Trust*

***Vedabhavan***

58-59, Road No.1, Chandragiri Colony, Neredmet, Secunderabad - 56
Ph: 040 - 27227669 / 27229775 / 9963888870 / 9440386363
Website: www.vedabhavan.org
Email : vedabhavan@gmail.com

***Subscribe to our Facebook Page***

*Facebook: http://facebook.com/vedabhavan*

*Youtube :* https://www.youtube.com/c/VedabhavanOrg

श्री महागणपतये नमः

# ।। समिदाधानम् ।।

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये ।।

ओं भूः। ओं भुवः। ओ৺ सुवः। ओं महः। ओं जनः। ओं तपः। ओ৺ सत्यम्।। ओं तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात् ।। ओमापो ज्योती रसोऽमृतं ब्रह्म भूर्भुवस्सुवरोम् ।।

ममोपात्त-समस्त-दुरित-क्षय-द्वारा श्री-परमेश्वर-प्रीत्यर्थं प्रातः समिदाधानं (सायं समिदाधानं) करिष्ये। (लौकिकाग्निं प्रतिष्ठाप्य। अग्निमिध्वा । प्रज्वाल्य।।)

परित्वाग्ने परिमृजाम्यायुषा च धनेन च । सुप्रजाः प्रजया भूयास৺ सुवीरो वीरैस्सुवर्चा वर्चसा, सुपोषः पोषै-स्सुगृहो गृहै-स्सुपतिः पत्या सुमेधा मेधया सुब्रह्मा ब्रह्मचारिभिः।

(तूष्णीं परिषिच्य । अथ समिधमादधाति ।।)

अग्नये समिध माहार् षं बृहते जातवेदसे यथा त्वमग्ने समिधा समिध्यस एवं मामायुषा वर्चसा सन्या मेधया प्रजया पशुभि-र्ब्रह्मवर्चसेनान्नाद्येन समेधय स्वाहा। एधोस्येधिषीमहि स्वाहा । समिदसि समेधिषीमहि स्वाहा । तेजोऽसि तेजो मयि धेहि स्वाहा । अपो अद्यान्वचारिष৺ रसेन समसृक्ष्महि। पयस्वा৺ अग्न आगमं तम्मा स৺सृज वर्चसा स्वाहा । सम्माग्ने वर्चसा सृज प्रजया च धनेन च स्वाहा। विद्युन्मे अस्य देवा इन्द्रो विद्यात् सहर् षिभिस्स्वाहा । अग्नये बृहते नाकाय स्वाहा। द्यावापृथिवीभ्या৺ स्वाहा । एषा ते अग्ने समित्तया वर्धस्व चाप्यायस्व च तयाहं वर्धमानो भूयासमाप्यायमानश्च स्वाहा।

यो माग्ने भागिन९ सन्तमथाभागं चिकीर्षति। अभागमग्ने तं कुरु मामग्ने भागिनं कुरु स्वाहा । समिधमाधायाग्ने सर्वव्रतो भूयास३ स्वाहा ।

(अथ तूष्णीं समन्तं परिषिच्य) स्वाहा । उपस्थानं करिष्ये ।।

यत्ते अग्ने तेजस्तेनाहं तेजस्वी भूयासं यत्ते अग्ने वर्चस्तेनाहं वर्चस्वी भूयासं यत्ते अग्ने हरस्तेनाह९ हरस्वी भूयासम् ।। मयि मेधां मयि प्रजां मय्यग्निः तेजो दधातु मयि मेधां मयि प्रजां मयीन्द्र इन्द्रियं दधातु मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधातु ।। अग्नये नमः । मन्त्रहीनं क्रियाहीनं भक्तिहीनं हुताशन । यद्धुतं तु मया देव परिपूर्णं तदस्तु ते ।। प्रायश्चित्तान्यशेषाणि तपः-कर्मात्मकानि वै । यानि तेषा-मशेषाणां कृष्णानुस्मरणं परम् ।। (अभिवाद्य)

(होमभस्म संगृह्य । वामकरतले निधाय । अद्भिस्सेचयित्वा ।। अनामिकया पेषयित्वा ।।)

मानस्तोके तनये मान आयुषि मा नो गोषु मानो अश्वेषु रीरिषः । वीरान्मानो रुद्र भामितो वधीर्हविष्मन्तो नमसा विधेम ते ।।

मेधावी भूयासम् (ललाटे) । तेजस्वी भूयासम् (दक्षिणबाहौ)। वर्चस्वी भूयासम् (सव्येबाहौ)। ब्राह्मवर्चसी भूयासम् (ह्रदये) । आयुष्मान् भूयासम् (कण्ठे)। अन्नादो भूयासम् (नाभौ)। स्वस्ति भूयासम् (शिरसि)।।

श्रद्धां मेधां यशः प्रज्ञां विद्यां बुद्धिं श्रियं बलम् । आयुष्यं तेज आरोग्यं देहि मे हव्यवाहन । श्रियं देहि मे हव्यवाहन ओं नम इति ।।

## कामोकार्षीत्जप सङ्कल्पः

आचम्य, पवित्रपाणिः । पवित्रम् धृत्वा दर्भेष्वासीनः दर्भान् धारयमाणः
प्रार्थना शुक्लाम् ...... शान्तये । प्राणायामः ओम् भूः ...... सुवरोम् ।

ममोपात्त समस्त दुरित क्षयद्वारा श्रीपरमेश्वर प्रीत्यर्थम् शुभे शोभने मुहूर्ते आद्यब्रह्मणः द्वितीय परार्धे श्वेत वराह कल्पे वैवस्वत मन्वन्तरे, अष्टाविंशतितमे, कलियुगे, प्रथमे पादे जम्बूद्वीपे भारतवर्षे भरतखण्डे मेरोः दक्षिणे पार्श्वे शकाब्दे अस्मिन् वर्तमाने व्यावहारिके प्रभवादि षष्ठि संवत्सराणाम् मध्ये प्लव नाम सम्वत्सरे दक्षिणायने वर्षऋतौ श्रावण मासे शुक्ल पक्षे पौर्णमास्याम् शुभतिथौ भानुवासर युक्तायां श्रविष्ठानक्षत्र नक्षत्र युक्तायां शुभयोग शुभकरण युक्तायां एवङ्गुण विशेषण विशिष्टायां अस्यां पौर्णमास्याम् शुभतिथौ ममोपात्त....प्रीत्यर्थं तैष्यां पौर्णमास्यां अध्यायोत्सर्जन अकरण प्रायश्चित्तार्थं अष्टोत्तरशतसङ्ख्यया कामोकार्षीत् मन्युरकार्षीत् इति महामन्त्रजपं करिष्ये । इति संकल्प्य । दर्भान् उत्तरतो निरस्य ॥ अप उप स्पृश्य

प्रणवस्य--इति जपित्वा दशवारम् प्राणान् आयम्य अष्टोत्तरसहरवारम् **'कामोकार्षीत् मन्युरकार्षीत्'** इति जपित्वा। - जपावसाने काममन्युरुपस्थानम् करिष्ये इति उपस्थानम् कुर्यात् ॥
उत्तमे शिखरे देवि भूम्याम् पर्वत मूर्धनि ब्राह्मणेभ्योह्यनुज्ञानम् गच्छ देवि यथा सुखम् अभिवादनम् कृत्वा नमस्कुर्यात् पवित्रम् विसृज्य आचमेत् ॥ माध्याह्निकं ब्रह्मयज्ञं च कृत्वा ॥

## ब्रह्मयज्ञं

आचम्य प्राङ्मुखाः उदङ्मुखो वा पवित्रपाणिः आसीनः सङ्कल्पम् कुर्यात्।
शुक्ळाम्----शान्तये। ममोपात्त समस्त-------प्रीत्यर्थम् ब्रह्मयज्ञम् करिष्ये ब्रह्मयज्ञेन यक्ष्ये।
विद्युदसि विद्य मे पापानमृतात् सत्यमुपैमि इति मन्त्रेण हस्तौ आ मणिबन्धम् प्रक्षाल्य
ॐ भूः तत् सवितुर्वरेण्यम् ॐ भुवः भर्गो देवस्य धीमहि ओग्म् सुवः धियो यो नः प्रचोदयात्
ॐ भूः तत्सवितुर्वरेण्यम् भर्गो देवस्य धीमहि ॐ भुवः धियो यो नः प्रचोदयात् ओग्म् सुवः
तत् सवितुर्वरेण्यम् भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात्।

ॐ अग्निमीळे पुरोहितम् यज्ञस्य देवम् ऋत्विजम् होतारम् रत्नधातमम् (ऋक् वेदः)

ॐ इषे त्वा ऊर्जे त्वा वायवस्थ उपायवस्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे (यजुर्वेदः)

ॐ अग्न आयाहि वीतये गृणानो हव्य दातये नि होता सत्सि बर्हिषि (सामवेदः)

ॐ शन्नो देवीरभिष्टय आपो भवन्तु पीतये शम्योरभिस्रवन्तु नः( अथर्वण वेदः )
इति जप्त्वा तदनन्तरं

सत्यम् तपः श्रद्धायाम् जुहोमि इति मन्त्रेण आत्मानम् परिषिच्य परिधानीयम् ऋचम् त्रिः जपेत्
ॐ नमो ब्रह्मणे नमोऽस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते करोमि। वृष्टिरसि वृश्च पाप्मानमृतात् सत्यमुपागाम् इति हस्तौ पूर्व्ववत् आ मणिबन्धात् प्रक्षाळयेत् ( देव ऋषि पितृ तर्पणम्)

शुक्ळाम्बरधरम्----शानतये। ममोपात्त ॥। प्रीत्यर्थम् देव ऋषि पितृ तर्पणम् करिष्ये -- जीवत् पितृकाः देव ऋषि तर्पणम् करिष्ये इति सङ्कल्पम् कुर्युः।

## १ देव तर्पणम्

देवतीर्थेन अङ्गुल्यग्रेण सकृत् सकृत् देवान् तर्पयेत्

१ ब्रह्मादयो यो देवाः तान् देवान् तर्पयामि

२ सर्वान् देवान् तर्पयामि

३ सर्व्वदेवगणान् तर्प्यामि

४ सर्व्वदेवपत्नीः तर्पयामि

५ सर्व्वदेवगणपत्नीः तर्पयामि

## २ ऋषितर्पणम्

नीवीति - ऋषितीर्थेन हस्तयो मध्येन द्विः द्विः ऋषीन् तर्पयेत्

१ कृष्णद्वैपायनादयः ये ये ऋषायः तान् ऋषीन् तर्पयामि

२ सर्व्वान् ऋषीन् तर्पयामि

३ सर्व्वऋषिगणान् तर्पयामि

४ सर्व्वर्षिपत्नीन् तर्पयामि

५ सव्वर्षिगणपत्नीन् तर्पयामि

६ प्रजापतिम् काण्डऋषिम् तर्पयामि

७ सोमम् काण्डऋषिम् तर्पयामि

८ अग्निम् काण्डऋषिम् तर्पयामि

९ विश्वान् देवान् काण्डर्षीन् तर्पयामि

१० साम्हितीर्देवता उपनिषदः तर्पयामि

११ याज्ञिकीर्देवता उपनिषदः तर्पयामि

१२ वारुणीर्देवता उपनिषदः तर्पयामि

१३ हव्यवाहम् तर्पयामि

१४ विश्वान् देवान् काण्डर्षीन् तर्पयामि

१५ ब्रह्माणम् स्वयम्भुवम् तर्पयामि

१६ विश्वान् देवान् काण्डर्षीन् तर्पयामि

१७ अरुणान् काण्डर्षीन् तर्पयामि

१८ सदसस्पतिम् तर्पयामि

१९ ऋग्वेदम् तर्पयामि

२० यजुर्वेदम् तर्पयामि

२१ सामवेदम् तर्पयामि

२२ अथर्व्वणवेदम् तर्पयामि

२३ इतिहासपुराणम् तर्पयामि

२४ कल्पम् तर्पयामि

### ३ पितृतर्पणम्

प्राचीनावीतिः

पितृतीर्थेन अङ्गुष्ठस्य तर्ज्जन्याश्च मद्ध्यभागेन पितृन् त्रिः त्रिः तर्पयेत्

१ सोमः पितृमान् यमो अङ्गिरस्वान् अग्निः कव्यवाहनः इत्यादयः ये पितरः तान् पितॄन् तर्पयामि

२ सर्व्वान् पितॄन्स्तर्पयामि

३ सर्व्वपितृगणान् तर्पयामि

४ सर्व्वपितृपत्नीस्तर्पयामि

५ सर्व्वपितृगणपत्नीस्तर्पयामि

ऊर्ज्जम् वहन्तीः अमृतम् घृतम् पयः कीलालम् परिस्रुतम् स्वधास्थ तर्पयत मे पितॄन् तृप्यत तृप्यत तृप्यत

उपवीति आचमनम्

## ।। महासंकल्पः ।।

शुक्लां........शान्तये । ओम् भूः....भूर्भूवस्सुवरोम् । ममोपात्त समस्त दुरितक्षयद्वारा श्री परमेश्वरप्रीत्यर्थम् तदेव लग्नं सुदिनं तदेव ताराबलं चन्द्रबलं तदेव । विद्याबलं दैवबलं तदेव लक्ष्मीपतेरङ्घ्रियुगं स्मरामि । ओं अपवित्र: पवित्रो वा सर्वावस्थां गतोपिवा । यस्मरेत् पुण्डरीकाक्षं सबाह्याभ्यन्तरः शुचिः । मानसं वाचिकं पापं कर्मणा समुपार्जितम् । श्री रामस्मरणेनैव व्यपोहति नसंशयः । श्रीराम रामराम । तिथिर्विष्णुः तथावारः नक्षत्रंविष्णुरेवच । योगश्च करणञ्चैव सर्वं विष्णुमयं जगत् । श्रीगोविन्द गोविन्दगोविन्द । अद्य श्री भगवत: आदिविष्णो: आदिनारायणस्य अचिन्त्यया अपरिमितया शक्त्या भ्रियमाणस्य महाजलौघस्य मध्ये परिभ्रमतां अनेककोटि ब्रह्माण्डानां एकतमे अव्यक्त महत् अहङ्कार पृथिव्यप्तेजोवाय्वाकाशाद्यैः आवरणै: आवृतेऽस्मिन् महति ब्राह्माण्डकरण्डमण्डले आधार शक्ति कूर्म अनन्तादि अष्टदिग्गजोपरि प्रतिष्ठितस्य उपरितले सत्यादि लोकषट्कस्य अधोभागे महानालायमान फणिराज शेषस्य सहस्रफणामणि मण्डलमण्डिते लोकालोक अचलेन परिवृते दिग्दन्ति शुण्डादण्ड उत्तम्भिते लवण इक्षु सुरा सर्पि दधि दुग्ध शुद्धार्णवै: परिवृते जम्पू प्लक्ष कुश क्रौञ्च शाक शाल्मलि पुष्कराख्य सप्तद्वीपदीपिते इन्द्र कशेरु ताम्र पुन्नाग गभस्ति सौम्य गन्धर्व चारण भारतादि नवखण्डात्मके महामेरु गिरि कर्णिका उपेते महा सर उरुहायमाण पञ्चाशत्कोटि योजन विस्तीर्ण भूमण्डले सुमेरु निषत हेमकूट हिमाचल माल्यवत् पारियात्रक गन्धमादन कैलास विन्ध्याचलादि महाशैल अधिष्ठिते लवण समुद्र मुद्रिते भारत किम्पुरुष हरि इळावृत रम्यक हिरण्मय कुरु भद्राश्व केतुमालाख्य नव वर्ष उपशोभिते जम्बूद्वीपे भारतवर्षे भरतखण्डे मेरोः दक्षिणेपार्श्वे कर्मभूमौ स्वाम्यवन्ति कुरुक्षेत्रादि समभूमध्यरेखाया: पूर्वदिग्भागे विन्ध्याचलस्य दक्षिणदिग्भागे, दण्डकारण्ये गोदावर्याः दक्षिणे तीरे सकलजगत्स्रष्टुः परार्धद्वय जीविनः ब्रह्मणः प्रथमपरार्धे पञ्चाशदब्दात्मके अतीते पञ्चाशदब्दादौ प्रथमेवर्षे प्रथमे मासे प्रथमे पक्षे प्रथमे दिवसे अह्नि द्वितीये यामे तृतीये मूहूर्ते स्वायम्भुव स्वारोचिष उत्तम तामस रैवत चाक्षुषाख्येषु षट्सु मनुषु व्यतीतेषु सप्तमे वैवस्वत मन्वन्तरे अष्टाविंशतितमे कलियुगे शालिवाहन शकाब्दे प्रभवादीनां षष्ट्याः सम्वत्सराणां मध्ये प्लव नाम सम्वत्सरे दक्षिणायने वर्षऋतौ श्रावण मासे शुक्ल पक्षे पौर्णमास्याम् शुभतिथौ भानुवासर युक्तायां श्रविष्ठानक्षत्र युक्तायां शुभयोग शुभकरण युक्तायां एवङ्गुण विशेषण विशिष्टायां अस्यां पौर्णमास्याम् शुभतिथौ ममोपात्त समस्त दुरित क्षयद्वारा श्री परमेश्वर प्रीत्यर्थं अनादि अविद्यावासनया प्रवर्तमाने अस्मिन् महति सम्सारचक्रे विचित्राभिः कर्मगतिभिः विचित्रासु योनिषु पुनःपुनः अनेकधा जनित्वा केनापि

पुण्यकर्म विशेषेण इदानीन्तन मानुष्ये द्विज जन्म विशेषं प्राप्तवत: मम इहजन्मनि पूर्वजन्मनि जन्म जन्मान्तरेषु च बाल्ये वयसि कौमारे यौवने वार्धक्ये च जाग्रत् स्वप्न सुषुप्ति अवस्थासु मनो वाक्काय कर्मेन्द्रिय ज्ञानेन्द्रिय व्यापारैः सम्भावितान्नां उपपातकान्नां सङ्कलीकरणान्नां मलिनीकरणान्नां अपात्रीकरणान्नां जाति भ्रम्शकराणां प्रकीर्णकान्नां एवं नवान्नां नवविधान्नां बहून्नां बहुविधान्नां सर्वेषां पापान्नां सद्यः अपनोदनद्वारा समस्त पापक्षयार्थं समस्त हरिहर देवता सन्निधौ दैवब्राह्मण सन्निधौ श्रावण्यां पौर्णमास्यां अध्यायोपाकर्म कर्मकरिष्ये तदङ्गं माध्याह्निक स्नानं करिष्ये ।

प्रार्थना -

अतिक्रूर महाकाय कल्पान्त दहनोपम । भैरवाय नमस्तुभ्यं अनुज्ञां दातुमर्हसि ।
दुर्भोजन दुरालाप दुष्प्रतिग्रह सम्भवम् । पापं हर मम क्षिप्रं सह्यकन्ये नमोस्तुते ।
त्रिरात्रं जाह्नवीतीरे पाञ्चरात्रन्तु यामुने । सद्यः पुनाति कावेरी पापं आमरणन्तिकम् ।
गङ्गा गङ्गेति योब्रूयात् योजनान्नां शतैरपि । मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति ।

## यज्ञोपवीतधारणमन्त्रम्

शुक्लाम्-- शान्तये ममोपात्त समस्त------ प्रीत्यर्थम् श्रौत स्मार्त्त विहित सदाचार नित्यकर्म अनुष्टान योग्यता सिद्ध्यर्थम् ब्रह्मतेजो अभिवृद्ध्यर्थम् यज्ञोपवीत धारणम् करिष्ये ॥
यज्ञोपवीत धारण महामन्त्रस्य परब्रह्म ऋषि त्रिष्टुप् च्छन्दः परमात्मा देवता यज्ञोपवीतधारणे विनियोगः

(नूतन यज्ञोपवीत धारण मन्त्रः)

यज्ञोपवीतम् परमम् पवित्रम् प्रजापतेः यत् सहजम् पुरस्तात् आयुष्यम् अग्रिमुम् प्रतिमुञ्च शुभ्रम् यज्ञोपवीतम् बलम् अस्तु तेजः ।
ॐ भूः भुवः सुवः
(जीर्ण यज्ञोपवीत निरसन मन्त्रः )
उपवीतम् भिन्नतन्तुम् जीर्णम् कश्मल दूषितम् विसृजामि नहि ब्रह्म वर्चः दीर्घायुरस्तु मे ॥
आचम्य ॥ ब्रह्मचारिणस्तु मौञ्जीं अजिनं दण्डं च मन्त्रेण धारयेरन् ॥

# काण्डऋषि तर्पणम्

तिलाक्षतान् गृहीत्वा आचम्य शुक्लाम्बरधरम् ----शान्तये ॐ भूः---

ॐ अद्य पूर्वोक्त एवं गुण विशेषण विशिष्टायाम् अस्याम् पौर्णमास्याम् शुभतिथौ ममोपात्त समस्त दुरितक्षयद्वारा श्री परमेश्वर प्रीत्यर्थम् श्रावणिपौर्णमासी पुण्यकाले अद्ध्यायोपकर्माङ्गम् प्राजापत्यादि काण्डऋषि तर्पणम् करिष्ये

तिलाक्षतान् गृहीत्वा निवीतिनः त्रिः त्रिः

१ प्रजापतिम् काण्डऋषिम् तर्पयामि

२ सोमम् काण्डऋषिम् तर्पयामि

३ अग्निम् काण्डऋषिम् तर्पयामि

४ विश्वान् देवान् काण्डऋषीन् तर्पयामि

५ साम्हितीर् देवताः उपनिषदः तर्पयामि

६ यज्ञिकीर् देवताः उपनिषदः तर्पयामि

७ वारुणीर् देवताः उपनिषदः तर्पयामि

८ ब्रह्माणम् स्वयम्भुवम् तर्पयामि

९ सदसस्पतिम् तर्पयामि

उपवीति आचमनम्

# वेदारम्भः

शुक्लाम्...शान्तये...ओम्...भूः...भुर्भुवसुवरोम् अद्य पूर्वोक्त एवङ्गुण विशेषण विशिष्टायामस्यां पौर्णमास्यां शुभतिथौ ममोपात्त समस्त दुरितक्षयद्वारा श्री परमेश्वर प्रीत्यर्थं श्रावण्यां पौर्णमास्यां अध्यायोपाकर्माङ्गं अध्ययनारम्भं करिष्ये (अपउपस्पृश्य)

ओं श्री गुरुभ्यो नमः हरि ओम्

गणानान्त्वा गणपतिं हवामहे कविं कवीनां उपमश्रवस्तमम् ।

ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पते आ नः श्रृण्वन्नूतिभिः सीदसादनम् ।

हरिः ओं इषेत्वा ऊर्जेत्वा वायवस्थ उपायवस्थ देवो वःसविता प्रार्पयतु श्रेष्ठतमाय कर्मणे आप्यायध्वम् अघ्नियाः देवभागं ऊर्जस्वतीः पयस्वतीः प्रजावतीः अनमीवाः अयक्ष्मा मावः स्तेन ईशत माघशँसो रुद्रस्यहेतिःपरिवोवृणक्तु ध्रुवाः अस्मिन् गोपतौस्यातबह्वीः यजमानस्य पशून्पाहि । हरिः ओम् । हरिः ओम् ब्रह्म सन्धत्तं तन्मे जिन्वतं हरिः ओम् ।

भद्रं कर्णेभिः श्रृणुयामदेवाः ........................................दधातु हरि: ओम् ।

हरि: ओम् संज्ञानं विज्ञानं प्रज्ञानं जानत् अभिजानत् ।

सङ्कल्पमानं प्रकल्पमानं उपकल्पमानंउपक्लुप्तं क्लुप्तं हरि: ओम् ।

हरि: ओम् प्रसुग्मन्ता धियसानस्य सक्षणि वरेभिः वरान् अभिसुप्रसीदत ।

अस्माकं इन्द्रः उभयं जुजोषति यत्सौम्यस्य अन्धसः बुबोधति हरि ओम् ।

हरि: ओम् अग्निमीळे पुरोहितं यज्ञस्य देवं ऋत्विजम् । होतारं रत्न धातमं हरि: ओम् ।

हरि: ओम् अग्न आयाहि वीतये गृणान्नः हव्यदातये । निहोता सत्सि बर्हिषि हरि: ओम् ।

हरि: ओम् शन्नो देवीः अभिष्टये आपोभवन्तु पीतये शम्योः अभिस्रवन्तुन्नः हरि: ओम् ।

हरि: ओम् अथातः दर्शपूर्णमासौ व्याख्यास्यामः प्रात: अग्निहोत्रं हुत्वा अन्यं

आहवनीयं प्रणीय अग्नीन् अन्वादधाति हरि: ओम् ।

हरि: ओम् अथकर्माणि आचाराद्यानि गृह्यन्ते । उदगयन पूर्वपक्षाहः पुण्याहेषु कार्याणि ।

यज्ञोपवीतिनाप्रदक्षिणं हरिः ओम् । हरिः ओम् अथ शिक्षां प्रवक्ष्यामि हरि: ओम् ।

हरि: ओम् अथात: सामयाचारिकान् धर्मान् व्याख्यास्यामः ।

धर्मज्ञसमयः प्रमाणं वेदाश्च चत्वारो वर्णाः हरि: ओम् ।

हरि: ओम् अथ वर्णसमाम्नायः । अथ नवादितः समानाक्षराणि । द्वे द्वे सवर्णे ह्रस्वदीर्घे ।

नप्लुतपूर्वन् । षोडशादितः स्वराः । शेषः व्याञ्जनानि हरि: ओम् ।

हरि: ओम् अइउण् । ऋऌक् । एओङ् । ऐऔच् । हयवरट् । लण् । ञमङणनम् । झभञ् ।

घढधष् । जवगउदतष् । ख फ छ ठ थ चटतव् । कपय् । शषसर् । हल्

इति माहेश्वराणि सूत्राणि अणादिसंज्ञार्थानि । वृद्धिरादैच् । अदेङ्गुणः हरिः ओम् ।

हरि: ओम् गीर्णश्रेयः । धेनवः श्रीः । रुद्रस्तु नम्यः । भगोहि याज्या । धन्योयं नारी ।

धनवान् पुत्रः हरि: ओम् ।

हरि: ओम् अथातः छन्दसां विवृत्तिं व्याख्यास्यामः हरिः ओम् ।

हरि: ओम् अथात: धर्मजिज्ञासा हरि: ओम् ।

हरि: ओम् अथात: ब्रह्मजिज्ञासा हरि: ओम् ।

हरि: ओम् आभीर्गीर्भिः यदतोन ऊनं आप्यायय हरिवः वर्धमान्नः ।

यदा स्तोतृभ्यः महिगोत्रा रुजासि भूयिष्ठभाजः अधतेस्याम ।

ब्राह्म प्रावादिष्म तन्नो माहासीत् । ओम् शान्ति शान्ति: शान्तिः । हरि: ओम् ।

# गायत्री जपसङ्कल्पः

आचम्य, पवित्रपाणिः । शुक्लाम् ...... शान्तये प्र् ओम् भूः ...... सुवरोम् प्र् ममोपात्त ...... प्रीत्यर्थम् शुभे शोभने मुहूर्ते आद्यब्राह्मणः द्वितीय परार्धे श्वेत वराह कल्पे वैवस्वत मन्वन्तरे अष्टाविंशतितमे कलियुगे प्रथमे पादे जम्बूद्वीपे भारत वर्षे भरतखण्डे मेरोः दक्षिणे पार्श्वे शकाब्दे अस्मिन् वर्तमाने व्यावहारिके प्रभवादि षष्ठि सम्वत्सराणां मध्ये प्लव नाम सम्वत्सरे दक्षिणायने वर्षऋतौ श्रावण मासे कृष्ण पक्षे प्रथमायां शुभतिथौ इन्दुवासर युक्तायां शतभिषक् नक्षत्र युक्तायां शुभ योग शुभ करण युक्तायां एवङ्गुण विशेषण विशिष्टायां अस्यां प्रथमायां मिथ्याधीत प्रायश्चित्तार्थं दोषवत्सु अपतनीय प्रयाश्चित्तार्थं संवत्सर प्रायश्चित्तार्थञ्च अष्टोत्तरसहस्रसङ्ख्यया गायत्री महामन्त्रजपं करिष्ये ।

दर्भान् उत्तरतो निरस्य

प्रणवस्य ऋषिः ।--- देवता ॥ भूरादि-- देवता ॥ इति न्यस्य दशवारम् प्राणायामम् कुर्यात्

आयात्वित्यनुवाकस्य-------------- परमात्मा देवता ॥ ॥

गायत्री जपम् अष्टोत्तरसहस्रवारम् ॥

उपस्थानम् ॥ गायत्र्युपस्थानम् करिष्ये उत्तमे---सुखम्

अभिवादनम् नमस्कारम्

पवित्रम् विसृज्य आचम्य ।